त्तिमेव, नहि जातिव्यक्ती एकाकारेण कदाचित्प्रतीयेते। अतो न तृतीयाकारप्रसङ्ग इति, तन्न; भिन्नाकारेण प्रतीतयोः कदाचिदेकाकारप्रतीतिरसिद्ध व, तथाप्युच्यते, सचायमेकाकारेण यदि तयोः संबन्धित्वेन प्रतीतः, तदा संयोगवत्तृतीयाकारः स्यादिति दू...[?] प्रतीतिर्नास्ति केवलमेकाकारप्रतीतिरेव, तर्हि जातिव्यक्त्योः का वार्ता? वस्त्वन्तर तीतिरेव भवतु को दोषः?

अथ निरूप्यमाणवस्त्वन्तरस्यादर्शनात्तयोरेव आकार इत्यङ्गीक्रियेत, तर्हि भिन्नाकारेण प्रतिपन्नयोरेकाकारप्रतीतिर्भ्रान्तिरेव स्यात्; अन्यथावस्थितस्यान्यथाप्रतिभानात् ।

अथ प्रतीतत्वादेकाकारस्य तयोरेकत्वमप्यस्तीति मन्यसे, तर्हि नाना भूतानामपि वृक्षाणामेकं वनमित्येकत्वमभ्रान्तमेव स्यात्। अथासीदतां नानावृक्षानुसन्धानात् एकं वनमित्यननुसन्धानाच्चैकत्वं बाधितम्, अतो वनप्रत्ययो भ्रान्त इति चेन्न; तर्ह्यत्रापि भेदप्रतीतिकालेऽभेदस्याननुसन्धानादभेदस्य भ्रान्तत्वं स्यात्, तत्रापि वनप्रत्ययकाले नानात्वानुसन्धानं नास्ति, नानात्वानुसन्धानकाले एकत्वानुसन्धानम् ।

अथ भेदो नास्तीति बाधकज्ञानं न दृश्यते, अतो न भ्रान्तत्वमिति, तर्ह्यत्रापि नेदमेकं वनमिति बाधकज्ञानं नास्ति, नानात्वानुसन्धानादर्थादेकत्वस्य बाध इति। अथ दूरत्वादपि दोषसंभावनया वनप्रत्ययस्य भ्रान्तत्वमिति, तर्ह्यत्राप्यतिनिरन्तरतया भेदभ्रम इति सर्वं समानमन्यत्राभिनिवेशात् ।

किञ्चास्तु तावदेकाकारप्रतिभासः; अस्तु च तस्याभ्रान्तत्वम्; तथाप्याकारप्रतिभासो जातिः; जातिभागस्य पिण्डभागस्य वा द्वितीयावभास एव स्यात्, नतु जातिजातिमतोरभेदावभासः। अथोच्येत न विलक्षणाकारेण वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः *

---

इति नन्दीश्वरस्य प्रभाकरविजयः
समाप्तः

---

* मातृकायामेतावदेवोपलभ्यते । [illegible] ऽधिकमपि प्रभाकरविजयो वर्तत इति । यतोऽपरिपूर्णमेवेदं प्रकरणं दृश्यते ।

# संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| **कालीतन्त्रम्**—सटीकानुवादम् | ॥৶০ | ॥০ |
| **शङ्करीसङ्गीतम्**— | ।৶০ | ।০ |
| **मुक्तिवादः**—गदाधरभट्टाचार्य्यविरचितः सटीकान्वय-भाष्यानुवादसहितः | २) | १॥० |
| **দুর্গোৎসবতত্ত্বম্**—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ১।০ | ১৲ |
| **पितृदयिता**—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १) |
| **দুর্গোৎসবনিবন্ধকদম্বম্**—দুর্গোৎসব-বিবেকাদিগ্রন্থপঞ্চকাত্মকম্ | ॥০ | ।৶০ |
| **कारकोल्लासः**—भरतमल्लिककृतः सोदा-हरणकारकनिर्णयरूपः | ৶০ | ৶০ |
| **ऋग्वेदभाष्योपक्रमणिका**—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥০ | ।৶০ |
| **গ্রহযাগতত্ত্বম্**—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৶০ | ।০ |

**प्रभाकरविजयः**—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारि-मीमांसाग्रन्थः ।

## मुद्राप्यमाणग्रन्थाः—

प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् ।

यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

आनन्दलतिका—सपत्नीक-कृष्णनाथविरचितं काव्यम् ।

पवनदूतम् —धोयीकविकृतम् ।

## मुद्रापणार्थं गृहीता ग्रन्थाः—

छान्दोग्यमन्त्रभाष्यम्—गुणविष्णुकृतम् ।

प्रमेयरत्नावली—बलदेवविद्याभूषणकृता ।

समञ्जसावृत्तिः—अनुपनारायण शिरोमणि कृ



[illegible]प्रातिशाख्यम्—शौनककृतम् ।

VIDYODAYA PRESS, CALCUTTA